18-12-2022.pdf

**Title : Narayana Upanishad - Narayana Kavacham - Dasha Avatara Stotram- Rama Ashtakam – Narayana (PrataH) Stotra (Devanagari)**

## Narayana Upanishad


नः पातकमहापातकानुपातकोपपातके
भ्यः पापेभ्यः प्रमुच्यते सर्ववेदपारायणं
पुण्यं भवति श्रीनारायणचरणसायुज्यमा
प्नोति श्रीनारायणचरणसायुज्यमाप्नोति
इतिनारायणोपनिषत्समाप्ता ॥ ॥ शुभं ॥


## Narayana Kavacham


विश्वरूपाच्छतक्रतुः त्रैलोक्यलक्ष्मीं बु
भुजे विनिर्जित्य मृधेऽसुरान् ॥ ४० ॥ इतिनारा
यणकवचं संपूर्णं ॥ ॥ शुभमस्तु ॥ ॥ ॥


## Dasha Avatara Stotram


व्यपोहति ॥ विनाशयेच्च म्लेच्छानां तं विष्णुं प्र
णमाम्यहं ॥ १० ॥ मत्स्यः कूर्मो वराहश्च नर
सिंहश्च वामनः ॥ रामो रामश्च कृष्णश्च बुद्ध
कल्की तथैव च ॥ एतानि दशनामानि प्रभाते
पठेत्सदा ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं
स गच्छति ॥ ॥ इति दशावतारस्तोत्रम् ॥ ॥


## Rama Ashtakam – Narayana (PrataH) Stotra


तिक्रम्य यांति ते वै सर्वं पदं ॥ १० ॥ इतिरामा
ष्टकं संपूर्णं ॥ ॥ ॥
ॐ नमो नारायणाय ॥ ॐ प्रातः स्मरामि भव
भीतिमहार्तिशांत्यै नारायणं गरुडवाह
नमंजनाभं ग्राहाभिभूतवरवारणमुक्ति
हेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥

ना० उ० १

ॐनमोनारायणाय॥ॐअथपुरुषोहवै
नारायणोऽकामयत॥प्रजाःसृजेयेति
नारायणात्प्राणोजायते॥मनःसर्वेंद्रि
याणिच॥खंवायुर्ज्योतिरापः॥पृथ्वीवि
श्वस्यधारिणी॥नारायणाद्ब्रह्माजाय
ते॥नारायणाद्रुद्रोजायते॥नारायणा

द्रो जायते नारायणात्प्रजापतिः प्रजा
यते नारायणाद्द्वादशादित्या रुद्रा वस
वः सर्वाणि छंदांसि नारायणादेवसमु
त्पद्यंते नारायणात्प्रवर्धंते नारायणे
प्रलीयंते अथपुरुषोह वैनारायणो ब्र नित्यो
ह्मा च नारायणो रुद्रश्च नारायणः शक्र

ना० उ २

नारायणः अधश्च नारायणः ऊर्ध्वं च ना
रायणो दिशश्च नारायणो ऽन्तर्बहिश्च
नारायणः नारायण एवेदं सर्वं यद्भूत
यच्च भव्यं निष्कलंको निरंजनो निर्वि
कल्पो निराकारो निराख्यातो निराख्या
तः शुद्धो देव एको नारायणो न द्वितीं

योस्ति कश्चित। य एवं वेद स विष्णुरेव भव
ति स विष्णुरेव भवति। ओं इत्यग्रे व्याहरे
न्नम इति पश्चात्। नारायणायेत्युपरि
ष्टात् ओं इत्येकाक्षरं नम इति द्वे अक्षरे
नारायणायेति पंचाक्षराणि एतद्वै ना
रायणस्याष्टाक्षरं पदमधीते यो ह वै

ना० उ० ३

नारायणस्याष्टाक्षरपदमधीते सोऽनुप
ब्रवः सर्वमायुरेति विंदति प्राजापत्यं
रायस्पोषं ॥ गौपत्यं ततोऽमृतत्वमश्नु
ते ततोमृतत्वमश्नुते ॥ इति प्रत्यगानं
दं ब्रह्मपुरुषं प्रणवस्वरूपमकार उ
कार मकारादिति तेनतान्येकधास

मभवं स्तदेनदोमिति यमुक्त्वामुच्यतेजं
तुर्जन्मसंसारबंधनात ॐ नमोनाराय
णायेति मंत्रोपासको वैकुंठभुवनंग
मिष्यति तदिदं परं पुरुषं पुंडरीकाक्षं
विज्ञानघनं ॥ तस्मादिन्यवभासमानमे
तावन्मात्रमोम् ॥ ब्रह्मण्योदेवकीपुत्रो

ना०
३०
८

ब्रह्मणो मधुसूदन इति सर्वभूतस्य मे
कं नारायणं कारणं परं ब्रह्मोम् एतद
थर्वशिरो योधीते पापो ऽपापो भवति
सायमधीयानो दिवसकृतं पापं नाशय
ति प्रातरधीयानो रात्रिकृतं पापं नाशय
ति माध्यन्दिनमादित्याभिमुखोधीया

नः पातकमहापातकानुपातकोपपातके

भ्यः पापेभ्यः प्रमुच्यते सर्ववेदपारायणं

पुण्यं भवति श्रीनारायणचरणसायुज्यमा

प्नोति श्रीनारायणचरणसायुज्यमाप्नोति

इति नारायणोपनिषत्समाप्ता ॥ ॥ शुभं ॥

ना० क० ५

ॐनमोनारायणाय।राजोवाच ययागुप्तः
सहस्राक्षः सवाहान्रिपुसैनिकान् क्री
डन्निवविनिर्जित्यत्रैलोक्याबुभुजेश्रियं १
भगवंस्तन्ममाख्याहि वर्मनारायणात्म
कं।तथाततायिनःशत्रून्येनगुप्तोजय
न्मृधे।२ श्रीशुकउवाच।वृतःपुरोहित

स्त्वाष्ट्रो महेंद्रायानुपृछते नारायणाख्य

वर्माह तदिहैकमनाः शृणु ॥३॥ विश्वरूप

उवाच धौतांघ्रिपाणिराचम्य सपवित्र उद

ङ्मुखः । कृतस्वांगकरन्यासो मंत्राभ्यां वा

ग्यतः शुचिः ॥४॥ नारायणपरं वर्म संनह्ये

द्भय आगते । पादयोर्जानुनोरूर्वोरुदरे ह

ना० क० ६

र्ययोरसि॥ मुखेष्विारस्यानुहृद्योरोकारादी
निविन्यसेत्॥ ॐनमोनारायणायेतिविप
र्ययमथ्या पिवा॥ करन्यासंततःकुर्याद्द्वादशा
क्षरविद्यया॥२॥ प्रणवादियकारांतमंगु
ल्यंगुष्टपर्वसु॥ न्यसेद्धृदयमोंकारंविक
रमनुमूर्धनि॥३॥ बकारंतुभ्रुवोर्मध्येणका

रे शिवयादिष्टोत्त विकारं नेत्रयोर्युग्मान्न
कारं सर्वसंधिषु ८ मकारं मस्तमुद्दिश्य
मंत्रमूर्तिर्भवेद्बुधः सविसर्गककंठं तु स
र्वदिक्षु विनिर्दिशेत् ९ ॐ विमलवेनमः
आत्मानं परमं ध्यायेद्ध्येयं षट्स्वन्निभि
र्युक्तं विद्यानिजस्वरूपो मूर्निर्मिमं मंत्रमु

ना० कृ०
७

राहेत ॥ १० ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षाम्
न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे ॥ दरारिचर्मासि
गदेषुचापपाशान्दधानोष्टगुणोष्टबा
हुः ॥ ११ ॥ जलेषुमां रक्षतुमत्स्यमूर्तिर्यादो
गणेभ्यो वरुणस्य पाशात् ॥ स्थलेषुमाया
वटुवामनोव्यात्त्रिविक्रमः खेवतुविश्व

रूपः ॥११॥ दुर्गेषटव्याजिमुखादिषु प्रभुः पा
यान्नसिंहोस्तुरघूष्यपारिः विमुंक्तोयस्य
मक्ताहृहासंदिप्तो विनेतुर्न्यपतंस्वगर्भाः
॥१२॥ यत्तत्वसौमाध्वनियज्ञकल्पः स्वदृष्ट
योप्नीतर्यरोववाहुः रामोद्विक्रटेष्वयवि
पवांसे मलत्नमणो व्याह्नरनायज्ञोस्मा

ना० क० ८

त्।१४ मामुग्रधर्मादखिलात्प्रमादान्नारा
यणः नरश्चहासात् दत्तस्त्वयोगादथ
योगनाथः पायाद्गुणेशः कपिलः कर्म
बंधात् १५ सनत्कुमारोवतुकामदेवा
द्धयशीर्षामांपथिदेवहेलनात् देव
र्षिवर्यः पुरुषार्चनान्तरात् कूर्मोहरि

मांनिरयादशेषात् ॥१६॥ धन्वंतरिर्भगवा
न्पात्वपथ्याद्द्वंद्वाद्भयादृषभो निर्जिता
त्मा यज्ञश्च लोकादवताज्जनांताद्बलोग
णात्क्रोधवशादहींद्रः ॥१७॥ द्वैपायनो भग
वानप्रबोधाद्बुद्धस्तु पाषंडगणात्प्रमा
दात् कल्किः कलेः कालमलात्प्रपा

ना० क० ९

त्वधर्मावनायोरुकृतावतारः॥१५॥ मां
केशवोगदयाप्रातरव्याद्गोविंदआसंग
वमात्तवेणुः नारायणः प्राह्णउदात्तश
क्तिर्मध्यंदिनेविष्णुररींद्रपाणिः॥१६॥दे
वोपराह्णेमधुहोग्रधन्वासायंत्रिधामा
वतुमाधवोमां दोषेहृषीकेशउतार्ध

रात्रेनिशीथएकोवतुपद्मनाभः॥२०॥श्री
वत्सधामापरात्रईशःप्रत्यूषईशोसि
धरोजनार्दनः॥दामोदरोव्यादनुसंध्यंप्र
भातेविश्वेश्वरोभगवान्कालमूर्तिः॥२१॥
चक्रंयुगान्तानलतिग्मनेमिभ्रमत्समंता
द्भगवत्प्रयुक्तं॥दंदग्धिदंदग्ध्यरिसैन्यमा

ना० क० १२

रूपैर्नः सदासर्वत्रसर्वगः ॥३३॥ विदिक्षुदिक्षू
र्ध्वमधः समंतादंतर्बहिर्भगवान्नारसिंहः ॥
प्रहापयल्लोकभयंस्वनेनस्वतेजसाग्रस्त
समस्ततेजाः ॥३४॥ मघवन्निदमाख्यातंवर्म
नारायणात्मकं ॥ विजेष्यस्यंजसायेनदं
शितोऽसुरयूथपान् ॥३५॥ एतद्धारयमाणं

स्तवं यं पश्यति चक्षुषा ॥ पदा वा संस्पृशे
त्सर्वः साधमात्मविमुच्यते ॥ २५ ॥ नकुत
श्चिद्भयं तस्य विद्याधारयतो भवेत् ॥ राज
रस्य ग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचि
त ॥ २६ ॥ इमां विद्यां पुरा कश्चित्कौशिको
ध्यायन्न द्विजः ॥ योगध्यारण्यां सांगज

ना०
क०
१२

होमसमरुधन्वनि ॥ ३७ ॥ तस्यैवपतिर्विमाने
नगंधर्वपतिरेकदा ॥ ययौचित्ररथःस्त्रीभि
र्वृतोयत्रद्विजस्तथा ॥ ३८ ॥ सोगतोन्यपतत
त्स्मयःसविमानोह्यर्वाक्क्रियाः ॥ सबा
लखिल्यवचनाद्दस्थीभ्यादायविस्मितः
३९ ॥ प्राप्यप्राचीसरस्वत्यांस्नात्वायाम

स्वमनुगाल। यइदंशृणुयात्कालेयोधा
रयतिवादृतः। तंनमस्यंतिभूतानिमुच्यते
सर्वतोभयात्॥४०॥ एतांविद्यामधिगतो
विश्वरूपाच्छतक्रतुः। त्रैलोक्यलक्ष्मींबु
भुजेविनिर्जित्यमृधेसुरान्॥४१॥ इतिनारा
यणकवचंसंपूर्णं॥ शुभमस्तु॥ ॥

दशा॰
स्तो॰
१८

ओंनमोनारायणाय॥ओंप्रथमेमत्स्यरूपे
णप्रविष्टोजलसागरे॥हरिर्नारायणःकृ
ष्णस्तंविष्णुंप्रणमाम्यहं॥१॥द्वितीयेकूर्मरू
पेणभूमिःस्थिरास्थापिता॥पृथिवीपालि
तायेनतंविष्णुंप्रणमाम्यहं॥२॥तृतीयेसूक
रेणैवसमुद्धृताचवसुंधरा॥कृतंसमुद्

मथनंतं० ॥३॥ चतुर्थेन नरसिंहेन हतो येन
बलीलया ॥ हिरण्यकश्यपुर्नाम तं विष्णुं
०॥४॥ पंचमेन तु रूपेण बलिदानबंधनं
कृतं वामनरूपेण तं विष्णुं ०॥५॥ षष्ठेपाशु
रामेण जमदग्निसुतेन तु ॥ क्षत्रियानिह
तायेन तं विष्णुं ०॥६॥ पुनर्दाशरथिर्भूत्वा

दशाव॰
स्तो॰
१५

मभद्रेण सप्तमे । रावणो निहतो येन तं विस्नुं
७ । भूत्वा यदुकुले पुत्रो ह्यष्टमे हि कृतत्त
स्तथा । कंसासुरवधो येन तं विस्नुं ८ । न
वमे बुद्धरूपेण योगज्ञानं च साधितं वि
षया निहता येन तं विस्नुं प्रणमाम्यहं ॥ ९ ॥
पुनः कलियुगे कल्कि रूपी विस्नुर्भवि

ध्याति ॥ विनाशनायैच म्लेच्छानां तं विष्णुं प्र
णाम्यहं ॥ १० ॥ मत्स्यः कूर्मो वराहश्च नर
सिंहोनुवामनः ॥ रामो रामश्च कृष्णश्च बुद्ध
कल्कीनयेवच ॥ एतानि दशनामानि प्रभाते
पठेत्सदा ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोके
स गच्छति ॥ इति दशावतारस्तोत्रम् ॥

रामा
छं.
१५

श्रीरामचंद्रायनमः॥ श्रीरामरामरघुनंदन
रामरामश्रीरामरामभरताग्रजरामराम
॥ श्रीरामरामरणकर्कशरामरामश्रीरा
मरामशरणंभवरामराम॥१॥ श्रीरामराम
सकलेश्वररामरामश्रीरामराममनुजे
श्वररामराम॥ श्रीरामरामधनुजेश्वरा

मरामश्रीरामरामशरणंभवरामराम॥४॥
श्रीरामरामकमलायतकरामरामश्री
रामरामकमलेक्षणरामराम॥श्रीरामरा
मकमलाप्रियरामरामश्रीरामरामशर
भव णंरामराम॥५॥श्रीरामरामकरुणानयरा
मरामश्रीरामरामकरुणेक्षणरामराम

रा०
श्र०
१२



श्रीराम राम शरणं भव राम राम श्रीरामरा
म शरणं ॥४॥ श्रीरामराम सकलाश्रयरा
मराम श्रीरामराम जगदाश्रयरामराम।
श्रीरामराम मृगयाश्रयराम राम श्री
रामराम शरणं भव राम राम ॥५॥ श्रीराम
राम गुणभूषणरामराम श्रीरामराम

गुणसागररामराम ॥ श्रीरामरामगुणभा
जनरामराम श्रीरामरामपूरणं ॥ ३ ॥ श्रीरा
मरामडुवितानकरामराम श्रीरामरामध
नुजांतकरामराम ॥ श्रीरामरामनरकांतक
रामराम श्रीरामरामपूरणंभवरामराम
॥ ४ ॥ श्रीरामरामसुकविप्रियरामराम श्री

रा०
अ०
१८

रामरामभुजनप्रियरामरामु॥श्रीरामरा
ममभुनिप्रियरामरामश्रीरामरामश
रणंभवरामराम॥५॥रामरामेनिरामेति
रामेरामेमनोरमे॥सहस्रनामतत्तुल्यं
रामनामवरानने॥६॥रामाष्टकमिदंपु
ण्यंयेपठंत्यमृतोपमं॥सर्वाल्लोकान

तिक्रम्य यांतितेवैसर्वंपदं ॥ २० ॥ इतिरामा
ष्टकं संपूर्णं ॥ ॥ ॥ ॥ ॥
ॐनमोनारायणाय ॥ ॐ प्रातःस्मरामिभव
भीतिमहार्त्तिशांत्यैनारायणंगरुडवाह
नमंजनाभं ॥ ग्राहाभिभूतवरवारणमुक्ति
हेतुंचक्रायुधंतरुणवारिजपत्रनेत्रम् ॥

प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादार-
विंदयुगलं परमस्य पुंसः ॥ नारायणस्य नि-
रयार्णवतारकस्य पारायणप्रवणविप्रप-
रायणस्य ॥ २ ॥ प्रातर्भजामि भजतामभयंक-
रं तं प्राक् सर्वजन्मकृतपापभयापहत्यै
यो ग्राहवक्त्रपतितांघ्रिगजेंद्रघोर ॥ शो-

कण्वाणाप्रामकौ कृतं स्तवचक्र: ॥१॥ श्लो
कत्रयगुरुमिदं [illegible]तरुस्यायय: पठेत ॥
लोकत्रयगुरुस्तस्मै स्यात्मपरस्तवि:
॥ अर्जुन: फाल्गुन: पार्थ: किरीटी श्वेत
वाहन: ॥ बीभत्सो विजय: कृष्ण: सव्यसा
चीधनंजय: ॥ एतान्यर्जुननामानि प्रातर

विष्णु
स्तो०
२०

स्यायय:पठेत ॥ मुच्यते सर्वपापेभ्यो विष्णु
लोकं स गच्छति ॥ ॥ कार्कोटकस्य नागस्य
दमयंत्यानलस्य च ॥ ऋतुपर्णस्य राजेंद्र की
र्तनं कलिनाशनं ॥ ॥ ॥ दानाकार्णो वलि
दाता दाता जीमूतवाहनः ॥ हरिचंद्र समो
दाता न भूतो न भविष्यति ॥ ॥ ॥ ॥